शास्त्रप्रकाशदीकाटीका ग्रन्थ माधवाय [redacted]:

श्रीमते रामानुजाय नमः श्रीगुरुभ्यो नमः अथ विशेषातिदेशस्य सामान्यातिदेशहेतुकत्वा
त्संगतिरानंतर्यं चेत्यभिप्रेत्याह विधांतेति उक्तमिति सामान्यत इति शेषः ॥ करिष्यमाणोपोद्घात
त्वेनाद्यं सूत्रं नेयं ननु किं विशेषविचारस्यारंभ्यो नवेति प्रधानसंशयं मत्वा तदर्थं संशयमाह प्रथममिति·
मिथ इति मिथो विप्रतिषेधाद्यथार्थकल्पनास्यादिति सूत्रस्यायमर्थः लौकिकवैदिकयोर्द्वयोरपि नि
रपेक्षतयाप्याकांक्षापूरकत्वादेकप्रवृत्तौ विप्रतिषेधाद्विनापवृत्तेराकांक्षारूपप्रयोजनमनति
क्रम्य कैवेति कर्तव्यता प्रवर्तत इति तेनेति तेनैव न्यायेन वैदिकाप्येककर्मगतैव न सर्वकर्मगतेति
सिद्धमित्यर्थः समुच्चय इति आकांक्षाशरणे निरपेक्षतामूलविप्रतिषेधोक्तिबलात्समुच्चय एव
तत्र निरस्त इत्यर्थः सूत्रे लक्षणांस्त्वध्यायः असाधारणार्थत्वं वा ॥ यस्याः शब्दगतमिति निर्वपति स्वादि
तेन देवतानिर्देश इत्यादिकं अर्थगतमेकदेवताकत्वादिकमित्यर्थः अव्यक्तेति आदिपदेन व्यक्त
चोदनत्वादि आग्नेयचोदनयेति प्रयोगविधिनेत्यर्थः उत्सन्नो निर्वपत्याभावात्तत्वार्थे उपस्थापय
तीति वचनव्यत्ययेनानुषज्यते तेनेमेवाह स्यांशेति सूत्रे यस्याग्नेयादेर्लिंगं चिन्हं सदृशं धर्म इति यावत्तस्य

स्यां विकृतौ दृश्यते तस्यां तदीय विध्यंतः स्यात्। अर्थस्य लिंगस्य तेन विध्यंतेन संयोगात् यथाग्नेया ५२
दिनामधेयमन्यत्र दृश्यमानमितिकर्तव्यतामुपस्थापयति तद्वदित्यर्थः॥ २३॥ दीक्षणीयेति एतेन सू
त्रेण लिंगादतिदेश उक्तः इह तु लिंगाभावेपि प्रवृत्त्यतिदेशमाशंक्य निराक्रियत इति संगतिः सूचितो उक्ता
र्थे लिंगदर्शनमाहुतस्येति इष्टिविकारत्वाभावेन तद्धर्मप्राप्तिरिति भावः। नानपेक्षेति सत्यां त्याकांक्षायां
प्रवृत्तिर्नैमित्तिकेति भावः। लिंगदर्शनमन्यथयति प्रयाजेति वाजपेयस्य प इति वाजपेयाग प
प्रयोगगतमपूर्वं दीक्षणीयादिगतं प्रयाजादिकं परंपरासंबंधेनानुष्ठानत इत्यर्थः सूत्रे ऐष्टिकं विध्यंत
स्य दीक्षणीयादिषु प्रवृत्तेस्तत्सोमेपि प्रवृत्तिः। इष्टि॥ नातो वेति ऐष्टिको विध्यंतः सौमिको वेत्यविनि
गमनाद् अनियम इति पूर्वपक्षस्यामंदत्वादिति भावः। अपंचत्वादेव संगतिः॥ पशौ॥ पूर्वत्रेव निर्वपत्यादि
लिंगाभावान्नैष्टिको विध्यंत इत्युत्थानात्संगतिः ईषालांगलाधारमतं शाकटं दंडमित्यर्थः। ननूपाकर
णनियोजनादिसन्निपातित्वम्गोम्नानान्नैराकांक्ष्यमित्यत आह इष्यते चेति। कतिपयाम्नानेप्यावह
नादिसन्निपात्याकांक्षास्तीत्यर्थः। सत्रे स्रुच्चमाघारयेज्जुह्वा प्रभृं समवक्ति एकादशप्रयाजानयज

शा०दी०८
२

णोस्यादिति लिंगदर्शनाद्दाक्षिणिको विध्यंतः ॥ ७ ॥ पूर्वन्यायेन सवनीयादिषु दाक्षिणिको विध्यंत इत्याशंके संग
ति पूर्वपक्षौ सूत्रे देवेष्टस्य यो दीक्षितो यदग्नीषोमीयं पशुमालभेत इति दीक्षासंबंधादग्नीषोमीयस्य
एव ॥ एकादशिनेषु देवस्यैव विध्यंतः पूर्ववदित्युत्थितेः संगति पूर्वपक्षौ एकादशिनेषु आग्नेयः
कृष्णः सारस्वती मेषीत्यादिषु सौत्रं लिंगदर्शनं व्याचष्टे । द्वैरशनेति सवनीये विवृता यूपं परिवीये
त्येकरशनाद्वैरशनविकारत्वाच्चापरे त्यासि द्वैरशन्यं इहाप्यस्तीत्याह द्वे द्वे रशने विध्यंतः आग्नीध्रीये सव
नीयस्याज्यानि गृह्णातीत्यादिः ॥ ८ ॥ सौत्रामण्यादिपशुगणेष्वग्नीषोमीय एव विध्यंतः गणत्वे
पि प्रत्येकं प्रकृतं धर्माकांक्षत्वादित्युत्थितेः संगति पूर्वपक्षौ सिद्धांतमाह सौत्रामणीति आदिपदा
दाग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमित्यादिगणाः प्रत्येकं पशुनामैकत्वेप्यस्ति गणांतर्गतत्वं
सामान्यमिति भावः विध्यंतः दाक्षिणात एकादशिनानीत्यादिधर्मः सूत्रे पशुगणेषु एकादशिनवि श्रीरामः
ध्यंतप्रवृत्तिः स्यात्सौत्रामण्यां त्रिपशुकायां यत्र त्रिष्टुप् यूपे धालभेत बर्हिर्धीस्मादिति इंद्रियं वीर्यं दध्यादिति य २
प्रत्ययनिषेधबलेन प्रतिपशुयूपप्राप्त्यवगमाच्चा अव्या ॥ इष्टिप्रकृतिचिंतानंतरं स्वांगादीक्षणीया

रिषु तद्देशोक्तिनयाजघन्यस्य सोमस्याविकृतिपरंपराविंस्यनइतिपदिकासंगतिः पूर्ववद्विशेषनियाम
काभावादनियमइत्युत्थानात्संगतिः विनियुक्तेतिप्रथममेवेतिभावः यथाश्रुतेशंकतेत्राह स्योत्तमान
न्वितिपरिहरतिनेतिसूत्रे अव्यक्तासुचोदनासु ॥ ग ए ॥ अव्यक्तत्वात्पूर्ववत्सौमिकविध्यंतइत्युत्थि
तेः संगतिः पूर्वपक्षो द्वादशाहविध्यंतप्राप्तेः फलमाह एवंचेति ॥ ग ८ ॥ गणत्वसामान्याद्द्वादशाहवि
ध्यंतइत्युत्थितेः संगतिः पूर्वपक्षौ संवत्सरनियमेतिचतुरहेषु रसासोरणमास्येदीक्षेरन्नित्यादिलिङ्गप
त्यर्थः सत्रेगवास्यगवामयनस्याविध्यंतसद्द्वादिषु संवत्सरादिमत्रेषु स्यात्तेगव्यशब्दस्य गोविकारे
वृत्तस्यापिगावो वाएतत्सत्रमासतेत्यर्थवादगतगोसंबंधमात्रेणोपचाराद्गवामयने प्रयोगः ॥ नि
का ॥ सहस्राद्यत्येकसंज्ञयायुगपत्प्रसक्तेत्यन्वयः निकायः संघः एषामस्तीतिनिकायिन उच्यंतेयो
गेनेतिशेषः पूर्ववद्विशेषनियामकाभावादव्यक्तत्वेनसौमिकविध्यंतइत्युत्थितेः संगतिः एकनामे
ति । नचनाम्नोतिदेशकत्वमेव अग्निहोत्रादिनामवन्नलिंगत्वमितिशंक्यं । साहस्रादिनाम्नोयुगपत्स
र्वत्रप्रवृत्त्याएकत्रमुख्यमितरत्रगौणमितिविशेषानवगमाद्वैषम्यादितिभावः ॥ लिंगदर्शनमाह

शा·दी·८ तथेति· प्रथमे साहस्रे सहस्रदक्षिणां विधायोत्तरस्मिन् यावदस्य सहस्रस्योत्तराधरागोगौर्विसमृक्षिता
३ भवति तावदस्माल्लोकादसौ लोक इति साहस्राद्दिदर्शनमित्यर्थः॥ क मे॥ अंगवत्फलादिनाप्यति देश
इत्युस्थितेः संगतिः उत्तरार्धं प्रथमतो व्याचष्टे कथं भावेति फलानि यथाशेति यावज्जीविकानि यमः स ८२
न्नपुरुषार्थोनत्वभ्यासः सनत्कल्पे इति यावज्जीविकाधिकरणोस्थितमिति भावः अंगमेवेति प्रधा
3 नत्वे गुणाभूतकर्मापेक्षानुरोधेनान्यत्रनयनासंभवादिति भावः उत्तरार्धं व्याख्याति शंकासद्भावयति
न फलमिति। यदि द्वयेति चोदना सामान्योपस्थितमिति शेषः। तथा च न प्राधान्यहानिरिति भावः।
यद्यप्येवमन्यदीयस्यान्यत्रनयनरूपवत्ति देशलाभावस्तथाप्युपेत्याहनतस्येति सत्रे कर्मणः
करणस्य विहितत्वावधृतेः फलादीनां तन्नियतसंबंधादप्रवृत्तिः॥ ग ण॥ तदर्थसंशयगर्भमधिक
रणांग संशयमाह इहेति अस्य संशय इत्यनेनान्वयः अत्र गुणफलानि विहितेषु प्रवर्तेते न वेत्यधिक श्री एम·
रणांगसंशयः तत्साधनविषयस्तु तदर्थसंशयः पूर्वाधिकरणावैषम्यात्संगतिः चमसवदिति चमस ३
वत्त्वणयनोपकारकत्वाविशेषादित्यर्थः॥ केवलपुरुषार्थेषु कत्वर्थपुरुषार्थद्रव्याद्यतिदेशोवि

रोधाभावात्सुतरां तद्द्वारा फलप्रवृत्तिरित्याह तद्येति साधनत्वेनाङ्गत्वेन गोदोहनादीनामिति यद्यपि
दर्शाङ्गत्वमस्ति तथापीन्द्रियकामप्रयोगे तदर्थस्य दध्नो होमे उपकारकत्वमेव नाङ्गत्वमिति भावः। तेना
भयार्थस्यापि दध्नः क्रत्वर्थतांशेनैवातिदेशो न पुरुषार्थत्वांशेनेति न तद्द्वारा फलप्रवृत्तिरित्युक्तं
भवति। अत्र वै गुणप इति यत्र दध्यादौ क्रत्वर्थपुरुषार्थत्वमसंबन्धाभावान्नैव गुणप तत्रेत्यर्थः। भाष्ये
अस्मिन्निति स्वादिरित्यर्थः। अभ्युपेत्यवादोऽयं पुरुषार्थांशे नातिदेशाभावादिति ध्येयं सूत्रे गु
णकामानां प्रणयनाश्रितगोदोहनाश्रितत्वात्तद्वत्त्याविकृतौ प्रवृत्तिः। एक। व्यवस्थाविचाराय
मन्त्रद्वयप्रसक्तिं संपादयति सोऽयमित्यादिना कालद्वय इति व्यवस्थायेति शेषः। मन्त्रद्वयमिति चोदकप्रा
प्तमिति शेषः गोदोहनादीनामनतिदेशेऽपि व्यवस्थायामतिदेशः स्यादित्युत्थानासंगतिः। सिद्धां
तयति प्रकृताविति आर्थिकी न तु शास्त्रगम्या आर्थिकत्वमुपपादयति चतुर्होत्रेत्यादिना। पृथिवी
होतेत्यादि चतुर्होतारो ध्यातेत्यादिः पंचहोता समुदायद्वारेणोतिह विशेषाविशेषः। समुदायस्याभि
मदर्शनायोग्यत्वादिति भावः। नकालेति कालपरत्वे द्वितीयायाः समभ्यर्थत्वद्वारागसंगादिति भावः। ६

अग्निर्हो॰

शा॰टी॰८ इमा सन्नाति हवींष्यभिमृशेदिति हविषां प्रकृतत्वान्न्यमुदाय द्वारेण तत्परत्वमिति विस्तरकथनमा
४ त्रं कालपरत्वेच्यार्थिकत्वसाम्यात लङ्गानरेश्च कृते लङ्कृणावद्यंभावाद्वचनत्काग्नेयाभिमर्शने मंत्रयो
विकल्पे अमावास्यायामपि चतुर्होता पौर्णमास्यामपि पंचहोते त्यव्यवस्था स्यादत्राह तत्रेति उभय
याविरोधाभावेप्यग्नीषोमीयसान्नाय्यलक्षणहविरंतरानुग्रहाय व्यवस्थयाभिमर्शने कृते न तेन ता
वताव्यवस्थायाः शास्त्रार्थत्वमित्यर्थः। सूत्रे एककर्मणि सौर्येचोदनैकत्वादविभावः आग्नेयव
द्व्यवस्थाहेतुकर्मोभावः ॥लिंग॥ सौर्यस्याग्नेयविकारत्वं सिद्धं कृत्वा पूर्वविचारः प्रवृत्तः तद्दहा
नौ चिंत्यत इति संगतिः प्रवृत्तिरित्यनेन तरं चिंत्यत इति शेषः ॥सिद्धांतमाह साहप्येति वाक्यशेषादिति-
अग्नयेऽग्निपस्वेति सोऽग्नयेऽग्निपतय इति वाक्यशेषादग्नेरेकत्वं अमुमेवादित्यं स्वेन भागधेयेनोपधावती
१०२ ति वाक्यशेषादित्यस्यैकत्वमिति भाष्य उक्तमित्यर्थः। सूत्रे लिंगस्य प्रयाजादेराग्नेयादि साधारण्या
त्सौर्यादिषाग्नेयादिविध्यंतविकल्पः ॥विध॥ ऐंद्र इति ऐन्द्रमेकादशकपालं निर्वपेदिति विहित इत्य श्रीरामः
र्थः। सौर्यादिवदैंद्रस्य सौरशाखावपि देवतासामान्यादाग्नेयविध्यंत इत्युत्थितेः संगतिः पुरस्तात्तेति प्रथ ४

नोपस्थितप्रातिपदिकार्थत्वात्तु रव्यत्वेऽत्र मत एवेदं नमिद इः प्रजया पशुभिस्तर्पयतीति तर्पणीयत्वाद्वाज्यत्वा
च्च प्राधान्यमित्यर्थः प्रत्यासन्नि शिष्टि देवतोद्देशेन द्रव्यत्यागरूपो यागः प्रधानं तत्र देवतोद्देशो गुणस्त
थाच प्रधानभूतत्यागान्वयाद्द्रव्यस्य कर्मणि प्रत्यासन्निरित्यर्थः। आराद्दैवतत्वरूपेति प्रातिपदिका
र्थत्वेन प्रतीतिविलम्बायामित्यर्थः। किंचेति पुरोडाशे औषधधर्माणां पयसि सान्नाय्यधर्माणां प्राप्तौ न
कस्यापि बाध इत्यर्थः। सूत्रे देवतासामान्याद्धविःसामान्यं बलाबलविप्रतिपत्तौ हविस्सामान्ये
न विध्यंतो नियम्येत कर्मणो हविस्त्यागस्य त्यज्यमानहविर्निरूप्यत्वात्॥ हि॥ कुम्भलेति प्राजा
पत्यं घृते चरुं निर्वपेत् कुम्भलमात्र कामइति श्रुत इत्यर्थः स्यादिति। विचार्यत इति शेषः। यदि धर्म
बाधप्रसंगेनेन्द्रपुरोडाशेन सान्नाय्यधर्मस्ताहिं तन एव कुम्भलचरौ नौषध इत्युच्यानां संगतिः आ
ज्यस्येति। उपांशुयाजधर्माः स्युरित्यर्थः। सिद्धान्तयति विशदत्वादिति सूत्रे तेजस्त्वात् हिरण्यमयम
नं तेजः आज्यमपि गवां तेजः सारभूतमिति तेजस्त्वं भवति साधारणं॥ मधु॥ दधीति चित्रेयामिष्टौ
श्रुत इत्यर्थः हिरण्यवन्मधूदकयोरपि नाज्यधर्मा इत्युच्यिते संगतिः उक्तमर्थं संग्रह्णाति वर्णस्य

शा॰दी॰ ८ म्यस्येति ॥ ॥इति श्रीचंपकनायककृतौ शास्त्रदीपिकाप्रकाशेऽष्टमाध्यायस्य प्रथमः पादः ॥१॥ ॥
५ वाजि ॥ पूर्वपादे तद्धितकृतदेवतानिर्देशे कदेवताकत्वनिर्वपत्यादिरूपस्य स्थलिंगादन्निर्देशो वि
चारितः इह तु कथंचिद्गुणप्रापकतीयाहस्य स्थालिंगादिनिपादानत्वमानेतर्ये च वाजिन इति चातुर्मा
स्येषु वाजिभ्यो वाजिनमिति विहिते वाजिनयागे सोत्रामण्यंगभूतेषु आश्विनं ग्रहाति सारस्व
तं ग्रहाति ऐंद्रं ग्रहं ग्रहातीति श्रुतेष्विव स्यर्थः सौमिक इति चोदकालिंगान्नाम्नः प्राबल्यादित्यर्थवेवः।
अर्थवादगतनाम्नः सिद्धसादृश्येनाप्रस्तावकत्वसंभवान्न सादृश्यविधायकत्वमिति सिद्धांत
यति प्रशंसेति हविरिति वाजिनस्य प्रयोजन्यत्वात्तु रायाश्ववी हि जन्यत्वादिति भावः। अत्रार्थ
वादगतस्यानतिदेशकत्वे स्थिते पुनरत्र उपपाद्यो यस्तु पोभवनो निष्टृथगाख्यातश्रवणाद्गुणस्य वि शा॰ ४
कय २ धायकतया सूपधर्मातिदेशकत्वमाशंक्य पुरुषव्यापाराश्रवणान्न विधायकत्वमित्युच्यत इत्यपुन श्रीरामः
रुक्तिः सूत्रे तात्छब्दात्सोमशब्दवत्त्वात् ॥ पञ्च ॥ इष्टिविशेषविकारचिंतात्र समाप्य पूर्वोक्तं स्मारयति ५
प्रशाविति अत्र स्फुरायह वद्दोषधविकारत्वमित्युत्यानात्संगतिः देवतासामान्यादुपांशुयाजविका

रः किं न स्यात्तत्राह हविरिति । अत्र सामान्याधिक्यमिति भावः । हविः सामान्यं तु तुल्यं देवतासामान्यं तु द
र्बलं हविः संबंधित्वस्यावश्यकं यदि कं यं दि पयस्वावास्त्र वेदिति लिंगदर्शनं चाधिकमिति सिद्धांतयति सा
न्नाय्यमिति ॥ दध्नः ॥ पूर्वोक्ते विशेषचिंतनात्संगतिः घनत्वेति पयस्युभयभवत्वं तु तुल्यं घनत्वमधिकमि
ति भावः । दध्नो घनत्वमात्रं पयसस्तु साक्षात्पयस्युभयभवत्वं गतिमत्वं चोभयमिति सिद्धांतयति पय
सो वेति । आमि ॥ पयसो दधिविकारत्वाभावे यामिक्षायाः स्यादिति संगतिः । अत्र संदिग्धमिति ॥ द्रव्य
सामान्यान्निश्चितमतोनेकदेवताकत्वादग्नीषोमीयविकारशंकेति भावः । द्रव्यमुख्य इति किमुभयस्यावि
कारः उत दध्नः । अथवा पयस इतीत्यर्थः । द्रव्यात्मकेति तथा चैकरूपहविषि विध्यंतरे समुच्चयविकल्पया
विध्यंतातिक्रमणेत्र व्याख्यायेचनिराकरणेपि न तद्विरोध इति भावः । विशेषाग्रहो मिश्र इति द्वितीयं
पक्षमाह तन्त्र इति गुणानः गुणाः सार्वविभक्तिकस्तसिः । सिद्धांतमाह पयसा स्थितिमत्र पयसि कर्मभूत
स्यापि द्रव्यः समाप्तितः पर्यवसानात्तन्न देवादध्ना हीनि संप्रदानवदिति मैत्रावरुणाय दंडं प्रयच्छती
त्यत्र दंडेनाभिप्रेपमाणत्वान्मैत्रावरुणवद्दध्नाभिप्रेयमाणं पयएवप्रमाणेनमित्यर्थः । स प्रमो चाग

धान

शा.दी.२ रेणावो वास्यर्थमिति वदार्थिकप्राधान्येप्यविरुद्धेति भावः पयस्यामिक्षात्वे काठिन्यं न स्यात्तत्राह दधि
६ संयोगाद्धीति सूत्रे उभयजन्यत्वाद्दधिपयोजन्यत्वात् ॥ सूत्र ॥ आमिक्षायाविशेषग्रहणादुभयविकार
त्वाभावेप्यहर्गणेषूभयविकारत्वं स्यादित्यव्यवस्थायोऽस्थितेः संगतिः सिद्धान्तयति सत्रस्यैवेति सादृश्या
6 त्प्रकृतिवत्त्वहेतुः कल्प्यमानः सत्रात्मकाहर्गणेषु सत्रद्वादशाहवदिति अहीनात्मके षडहीने द्वादशाह
वदिति विशिष्यैव कल्पनमित्यर्थः सूत्रे सत्राहीनोभयस्यापि द्वादशाहस्य गणेषु व्यवस्थयाप्रवृत्तिः
द्वादशाहकर्मण एकत्वात् ॥ अन्य ॥ अहीनत्वात् कुंडपायिनामयने पंचदशरात्रे च पूर्वन्यायेनाहीनधर्म
इति संगतिः तत्रेति पंचदशरात्र एवमाम्नायते त्रिवृदग्निष्टुदग्निष्टोमः त्रिरात्रो दशरात्र उदयनीयो
ऽतिरात्र इति कुंडपायिनामयनेपि मासमग्निहोत्रमित्यारभ्याने दशरात्रो महाव्रतमुदयनीयोऽतिरात्र इत्येव
माम्नायते तयोरुभयोरप्यन्त एवातिरात्र एवाम्नायते उपर्यतिरात्रत्वं चाहीनत्वादाहावहीने दृष्टमित्यनयो
रप्यहीनत्वमेवेत्यहीनधर्मप्राप्तिरित्यर्थः सिद्धान्तयति नैवमिति यद्यपि सत्रेयत्ते पंयं काममिच्छति ते पंच श्री रामः
दशरात्रमुपेयुरिति पंचदशरात्रे कुंडपायिनामयनेपि भूतिकामा उपेयुरिति श्रुतावुपेयिचोदने वदृश्यते ६

माष्येपितथैवसूत्रेपिमंत्रेवाउपेपिचोदनादित्येवोक्तं तथापिशास्त्रवांतरेअसिचोदनाप्यस्तीत्यभिप्राये
णोभयग्रहः नन्वनुपदन्यानंतरं ज्योतिरात्रस्तेनाहीन इति श्रुत्याअहीनत्वस्याप्युक्तत्वान्नविनिगमनेत्याशं
क्यतस्यार्थवादगतत्वात्संच्छदशरात्रस्यकुंडपायिनामयनस्यचान्यतरतोतिरात्रत्वादहीनत्वमन्यतर
तोतिरात्रभूतेष्वहीनत्वदर्शनात् ॥ ॥इति श्रीचंपकनाथकृतौ शास्त्रदीपिकाप्रकाशे अष्टमाध्याय
स्यद्वितीयः पादः ॥२॥ ॥हवि॥ पूर्वत्रास्फुटाल्लिंगादतिदेशो निरूपितः इदानीं तु प्रबललिंगादिति पादभेदः स्फु
टास्फुटलिंगत्वानानंतरमेतत्प्राबल्यहानमित्यानंतर्यंचरममितीत्यनेनतरमघरकत्वायांश्रयत इति
शेषः सूत्रे हविर्गणे परं हविरुक्तस्यहविषोविकारः देशसामान्यात् ॥ गम ॥ जनकसप्तरात्र इकिंकोसुरु
विंदाहयोष्टौसप्तरात्रास्तेष्वष्टमोजनकः सप्तरात्रस्तत्रेत्यर्थः किमेतेक्षितिप्रथमः षडहस्त्रिवृत्संच दशाः
सप्तदशेकविंशत्रिणावत्रयस्त्रिंशस्तोमकः तत्राद्यंपत्रिवृत्स्तोमकमहस्तद्विकारत्वं किमेषांचसप्तदश
गतानां चतुर्णामिन्द्रास्तुतत्रिवृदाद्यहस्तुष्टयविकारत्वमिति संशयइत्यर्थः पूर्ववदितिः यद्यपि पूर्वाधिक
रणेसंघातसामान्यदौर्बल्यंनोक्तं तथाप्याकराभिप्रायेणेदमुक्तमत एवसंगतिः ग्राह इति च तात्रित्रिवृत्त्य

शा०टी०८ हानीति शब्दगम्यो न तु प्रत्यक्षगम्य इत्यर्थः उभयोरपि शाब्दत्वादविनिगमनेत्य आह तत्रेति त्र्यंगेति·
७ त्रिवृत्त्वस्य स्तोत्रीयासंख्यारूपत्वादिति भावः अन्यथेति षडहे आद्यस्याग्निष्टोमत्वोत्तरस्यैव चतुर्थ
प्रवृत्तेश्चतुर्णामप्यग्निष्टोमत्वं स्यादित्यर्थः सूत्रे चत्वारि त्रिवृंतीत्यादिगणचोदनायां पस्यात्रिवृ
दादेर्लिंगं तस्यैवावृत्तिः प्रतीयते यथा पूर्वत्र बार्हस्पत्यसे आग्नेयविध्यंतस्तद्वत्॥ कालः॥ पूर्वत्र यथा
चतुर्णां द्वादशाहिकानामह्नां प्रवृत्तिस्तथात्रापि द्वादशरात्रविध्यंतप्रवृत्तिरुत नात्राहानि विधी
यन्ते किंतु प्रसिद्धषडहस्यैव चतुर्वारमावृत्तिमात्रमिति संशयनिष्कर्षः एवं च चतुर्विंशत्या
मिति न सिद्धवद्धर्मिनिर्देशः किंत्विदमपि पूर्वपक्षकोट्यंतर्गतं बोध्यं द्वादशाह इति। तत्रापि दाश
मिकन्यायेन प्रायणीयोदयनीयौ वर्जयित्वा मध्यमो दशरात्रः प्रवर्तत इत्यर्थः चतुः संख्यास्त्वि
ति चतुर्वारावृत्तिरित्यर्थः षडहविध्यंतः षडहावृत्तिः प्रसिद्धषडहाभ्यासे नैव संख्यापूरणमिति श्रीरामः
सिद्धांतस्थितेरित्यं व्याख्यातिध्येयं सूत्रे कालाभ्यासे कालशब्देन षडादिभिरहोभिः संमितानि ७
कर्माण्युच्यंते तेषामभ्यासे विवादरिराचार्यः कर्मभेदाद्द्वादशाहिकानां नानाहीनां प्रवृत्तिरिति

मन्यते ॥ संस्था ॥ तत्रेति । किं ज्योतिष्टोमानुवादेन कल्पार्थतयाऽऽज्ञातकृत्वोभ्यासो विधीयते उत तत्
त्संस्थाक कर्मान्तरगणो विधीयते ॥ तत्र गणस्य सामान्याद्द्वादशाहप्रकृतित्वे स्यात् इत्यर्थः पूर्ववदिहाप्या
वृत्तिश्रियां स्तु विशेषः पूर्वत्र षडहाद्व्यतिरिक्ते प्रसिद्धषडहार्थाइ हेतु प्रसिद्धज्योतिष्टोमार्थेतु स्यो नात्सं
गतिं उपादेयइति अनुपादेयत्वेफलं चाकर्मसन्निधावितिन्यायेन कर्मान्तरविधिरेव स्यान्नाभ्या
सविधिरितिभावः सिद्धान्तयति संस्थेति ज्योतिष्टोमस्यासन्निहितत्वान्न तत्राभ्यासविधिः न चो
क्थ्यादिशब्देस्तदनुवादस्तेषां तन्नामत्वासंभवादितिभावः सप्तदशो नोक्थ्यादिसंस्थागणोपु
ज्योतिष्टोमाभ्यासः प्रतीयते उक्थ्यादिभिः कृतलक्षणस्य कृतसंस्तस्य ज्योतिष्टोमानुवादोत ॥ स्या
गणा ॥ प्रदिशतो क्थ्याद्योगणो द्वादशाहविध्यंतस्तत्र्युक्थ्यस्तोत्राण्यपि तदीयोक्थ्यस्तोत्रविका
र इत्युस्थितेः संगतिः उक्तमितियद्यपि पूर्वत्र विध्यंते द्वादशाहविध्यंत इत्येतावन्मात्रमुक्तं तथा
पिदाशमिकन्यायेनतद्वीयोद्द्वारात्रएव प्रवर्तते स च संख्यापूरणार्थं दशकृत्व आवर्त
नीय इत्युक्तप्रायमित्यर्थः तस्मिन्निति दशरात्रे अभितो द्वावग्निष्टोमौ मध्ये षडुक्थ्यास्तत्र

शा०दी० ८ प्रतिदर्शकं द्वादशाहमिशेषमौत्तया च चतुर्विंशत्यग्निष्टोमाः ते उक्थ्यसंस्थापादयितव्याः अग्निष्टोमस्तो

८ त्ररूपप्रज्ञायज्ञीयानंतरमुक्थ्यस्तुत्यस्तोत्रत्रये उक्ताः कार्या इति यावत् तेन ह्यागम्यमानेषूक्थ्यस्तोत्रेषु

किं द्वादशाहिकविकारत्वमुत ज्योतिष्टोमिकविकारत्वमिति संशये इत्यर्थः सत्रे गणानां द्वादशाहा

8 दुपचय उक्थ्यस्तोत्रादीनां कुतः द्वादशाहिकत्वमितिरिक्तानां तेषां गणानां तन्त्रस्य सन्निधानादुक्थ्यस्तो

त्रोपचयोपि तत एव प्राप्तः ॥ गाय ॥ संख्येति संख्याविशिष्टायामेवर्चि प्रयोगादाहत्याधिकर

णन्यायेन संख्येव वाच्येत्यर्थः उक्तार्थे लिंगदर्शनमाह तिस्र इति अनुष्टुप् द्वात्रिंशदक्षरा तया च

तिस्रोप्यनुष्टुभः षण्णवत्यक्षरा भवंति च तास्तिस्रो गायत्र्यः षण्णवत्यक्षराः एवं च तिसॄणामनुष्टुभां गा

यत्रीचतुष्टयात्मकत्वमुपपद्यते आदिशब्देन ये हि द्वे गायत्र्यौ सैका जगतीत्यादिग्रहः अतिदेश

विचारत्वाभावादध्यायसंगतिमवांतरसंगतिं चाह पूर्ववदिति सत्रे गायत्र्यं भवतीति गायत्रीषु स्तु श्रीराम:

तासु प्राकृतीनां त्रिष्टुबादीनामवच्छेदः अक्षरावलोपः कार्यः चोदकेन प्राकृतीनामधिकारात्सन्नि ८

धानात् न च प्रत्यक्षश्रुताभिः प्राकृतीनां बाधनं बाधने संख्यात्वाद्गायत्रीशब्दार्थस्य संख्यामा

त्ररूपत्वेन विरोधाभावात्। यथाशान्ताग्निहोमं भवतीत्यत्र हृद्याशाहिकानामन्हामुक्थ्यावल्लोप
स्तथेहाप्यक्षरावल्लोपः गायत्रीशाहृस्यसंख्यावाचित्वं संख्याव्यभिचारात्॥ ॥इति श्रीचंपकना
थकृतौ शास्त्रदीपिकाप्रकाशे ऽष्टमाध्यायस्य तृतीयः पादः॥३॥ ॥हरिः॥ ॥अग्निहोत्रप्रवा
दविचाररूपतया पादांतरत्वमानेन तत्पंचप्रसंगसंगतिं दर्शयन् संशयमाह प्रपंचवचनमिति गुणविधिप
कृष्यदुर्बलत्वान्नामत्वस्वीकरोतीति तत्रेति समासस्येति दर्व्याहोमो दर्विहोम इति तत्पुरुषस्येत्य
र्थः लौकिकानामेव नामेति प्रकृत्मुत्थापयति। तत्रेति प्रयोगादिति शिबीनां दार्विहोमिको ब्राह्म
णः श्वंवष्टानां दार्विहोमिको ब्राह्मण इत्यादि स्मृतावितिशेषः तेषामिति तेषामेवेत्यर्थः सिद्धां
तयति वैदिकेष्वीति प्रयोगादिति एकपञ्चायदिजुहुयादिमंत्रवत्कहोमं दर्विहोमं कुर्यादि स्मृतावीति
शेषः तेषामिति तेषामेवेत्यर्थः सिद्धांतयति वैदिकेष्वीति प्रयोगादिति एकपञ्चायदिजुहुयादिमंत्रवत्सो
होमं कुर्यादिति स्मृतावितिशेषः वैदिकानामपीति नामेत्यनुषज्यते यागहोमोभयनामत्वप्रकृत्मुत्था
पयति तत्र यजतीति दर्शपूर्णमासयोरिति शेषः॥ आदिनात्सोमस्य यद्व्रीहा वुज्जुहोतीति प्रयोगो

शा० टी० ५ गृह्यन्ते तेषामपीति नामेत्यनुषज्यते। सिद्धान्तयति न यागस्येति। कर्मान्तरमिति चतुरवत्तं जुहोतीति ना
२ यागमनूद्य चतुरवत्तं विधीयते किंतु रवत्तस्य संस्कारकं होमरूपं कर्मान्तरं विधीयत इति तन्नीये उक्त
मित्यर्थः। आशङ्कितमिति गुणाभिधानं स्याद्द्व्यपदेशादिति सूत्रेणेति शेषः। उत्तरत्वासूर्यमाह
तत्र रव्येति। आचारगृहीतादर्वी प्राम्नातस्तु खिलयामूलं देत्पादव्यो जुहोति तथा दर्व्या ब्रह्मोद
नाउद्धृत्य सर्वेधसेकवयेमेघ्यायजुहोतीति प्राम्नात्त्रतस्तत्र रव्यान्यायेन नामत्वं सिद्धं न लोकि
कानामाचारग्रहणादिति सूत्रेणोपसंहृतमित्यर्थः। दर्विहोमो यज्ञाभिधानमिति प्रथमसूत्रे
मित्यु एवोक्तत्वादुपसंहृतं किः नामत्वस्य तत्त्वरव्यान्यायसिद्धत्वादेवगुणविधित्वस्य चोद्यमात्रमि
त्युक्तं युक्तिसहत्वं सूचितं सूत्रे दर्विहोमशब्दस्य यज्ञाभिधानकर्मनामधेयं होमसंयोगात्॥ त
स्मिन्॥ इदानीमपवादविचारः प्रस्तूयत इत्याह प्रासंगिकमिति किं भिन्ने जुहोति स्कन्ने जुहोती श्री गण०
त्यादयो दर्विहोमाः प्रकृतिमन्त इहितावेत्यर्थः। नेति अव्यक्तत्वं सति साम्ये विशेषनियामकमि २
तिशेषः। नारिष्ठादीनामित्यादिना पत्नीसंयाजपिष्टलेपफलीकरणहोमादीनां ग्रहणं तं हि

होमप्रकृतिकत्वमेवास्त्विति चेत् कृते ऽस्त्विति सिद्धान्तयति नैवमिति तत्राकिमग्निहोत्रहोमप्रकृति
कत्वमुत नारिष्टहोमप्रकृतिकत्वं न तावदाद्यः होमत्वस्य नारिष्टादिसाधारण्याद्विशेषनियामक
दित्व २ स्य चान्यस्याभावादभिप्रेत्याह द्वितीयं दूषयति नारिष्टेति यद्यपि दार्शपौर्णमासिकपरिधिविधेर्घारंगत्रधा
नार्थत्वया नारिष्टार्थत्वादग्निहोत्रे यद्दिदोषप्रपद्येत अतः परिधिनिनयेदिति परिधिदर्शनमन्त्रो सा
वित्रहोमे अन्तर्वेदि तिष्ठन्त्सावित्राणि जुहोतीति वेदिदर्शनं चरुर्विहोमानां नारिष्टप्रकृतिकत्वे लिंग
संभवति तथापि त्र्यम्बकहोमेषु अप्रतिष्ठिता वै त्र्यम्बका इत्याऊः। नेध्मा बर्हिः सन्नत्यनेन प्रया
जानूयाजा इज्यन्ते न सामिधेनीरन्वाहेति अप्रतिष्ठितत्वदोषकीर्तनपूर्वकं माहित्यं चरुं निर्वपेदित्या
घन्यविधिपरवाक्ये इध्माद्यभावदर्शनान्न नारिष्टप्रकृतिकत्वमिति गम्यते। अन्यथा इध्मादीनामे
वप्राप्तेस्तदभावानुवादानुवादायोगात् अनन्यथासिद्धेध्माद्यभावदर्शनबलान्नारिष्टप्रकृतिकत्वा
भावे निश्चिते ततः परिधिनिनयं तर्वेदि तिष्ठन्निति परिधिदेशं वेदिदेशं च लक्षयतीति भावः। पत्नीसं
याजानामाज्यहविष्कत्वाद्दोषधहविष्कत्र्यम्बकादिषु न प्रकृतित्वं पिष्टलेपफलीकरणहोमयोश्च

शा·दी·८
१०

10

प्रतिपन्निनयाधर्मोप्रयोजकत्वान्नप्रकृतिकत्वमितिनकस्यापिहोमस्यहविर्होमप्रकृतित्वं एवंतर्हि
सुसंहृष्यालाभात्वंदसंहृष्याः सोमएवप्रकृतिरस्त्विति चेन्नहविर्होमेषुदेवतालाभात्तद्विनचतुर्थी
मन्त्रवर्णै स्वार्थेनयाविनियुक्तदेवताराहित्यलक्षणाव्यक्तत्वाभावात् किंचसोमप्रकृतिकत्वे
वषट्कारप्राप्तेः पृथिव्यैस्वाहान्तरिक्षायस्वाहेत्यादिषुस्वाहाकारेणस्यादित्याद्यभिप्रेत्याह
लिंगान्तराणीति ॥ ॥इति श्रीचंपकनाथकृतौ शास्त्रदीपिकाप्रकाशेऽष्टमाध्याये चतुर्थः
पादः॥४॥ अष्टमाध्यायश्चासमाप्तम् ॥ शुभमस्तु ॥ ॥

श्रीराम:
१०